विलोकितुं छन्नं गृहान्तरजालिकायां स्थितः। तदा नन्दयन्ती जागरित्वा पतिमनालोक्य दुःखिताऽभूत्। स्मारं स्मारं गुणान् पत्युर्वियोगविधुरा सती गले पाशं क्षेप्तुं लग्ना। जगाद च–यदि मे पतिर्नागमिष्यत्यधुना तदा मया मर्तव्यमेव। एवं प्रियां दुःखिनीं दृष्ट्वा रतिदानेन सन्तोष्य समुद्रः प्राह–अहं विदेशं गमिष्यामि, त्वया कस्याप्यग्रे न वक्तव्यमित्यापृच्छ्य प्रियां समुद्रदत्तोऽब्धिमार्गे लक्ष्म्यर्थं चचाल। इतोऽन्तर्वत्नी नन्दयन्ती मासत्रयं निनाय। तां सगर्भां वीक्ष्य श्वश्रूर्दध्यौ श्वशुरश्च—पुत्रस्तु विदेशं गतः। इयं वधूरन्यादृशी दृश्यमानाऽस्ति। न ज्ञायते स्त्रीणां स्वरूपम्। यतः—

"बाह्याकारसदाचारवृत्त्या स्त्रीषु न विश्वसेत्!। दुरन्तपरिणामाः स्युः, किम्पाकफलवत् खलु ॥ १ ॥

तन्नूनं परिहार्यैषा, श्वपचीवात्मपङ्क्तितः। निष्कलङ्के कुलेऽस्माकं, कलङ्कश्चानया ददे ॥ २ ॥

विमृश्येति श्रेष्ठी स्नुषां तां जिहासुर्निष्करुणाभिधं पुरुषं प्रति रहः प्राह–एतां मत्स्नुषां वने मुक्त्वाऽऽगच्छ। ततः पुरुषस्तां दूरतो वने मुक्त्वा पश्चाद्वलले। तावदाकस्मिकोत्पातभीता महासती मूलच्छिन्नवल्लीव पतिता क्षितौ। पुनः सचेतनीभूय जगौ–हा! हा!! दैव! केनापराधेनाहं श्वशुरेण त्यक्ता?। मया किं कृतं कर्म?। एकस्तावद्भर्ता मां त्यक्त्वा विदेशं गतः। द्वितीयं त्वहं वने त्यक्ता। मया मनागपि शीलं न खण्डितम्!। अस्मिन् भवे समुद्रं पतिं मुक्त्वाऽन्यो जनः सर्वोऽपि मम भ्राताऽस्ति!। ततः सा नन्दयन्ती विलपन्ती भृगुपुरस्वामिना तत्रागतेन पद्मभूपेन दृष्टा। मम भगिनी त्वमिति कृत्वा स्वपुरं निनाय पद्मभूपः। तत्र भूपादेशेन यथेष्टं दानं ददाना शीलं पालयन्ती धर्मकर्मनिरता नन्दयन्ती तिष्ठति स्म। तत्रस्थया तया पुत्रो जनितः। इतो निष्करुणः स पुमान् नन्दयन्तीं वने विसृज्य पश्चादेत्य श्रेष्ठिनः पुरस्तान्नन्दयन्त्याः शीलस्वरूपं

प्रोक्तवान् । इतो विदेशं गतः समुद्रदत्तो बहुधनमर्जयित्वा गृहे समागात् । पित्रा स्नुषात्यजनसम्बन्धे प्रोक्ते समुद्रदत्तोऽवग्–मत्प्रियाया यो गर्भोऽभूत् स मदीय एव ज्ञातव्यः । ततः श्रेष्ठी दुःखितः स्नुषां विलोकयितुं जनान् प्रेषयामास । समुद्रदत्तोऽपि प्रियां द्रष्टुं चचाल । सागरपोतोऽपि शोकसागरमध्यगः स्नुषामन्वेष्टुं चचाल । ग्राम-कर्बट खेट-नगरारण्यभूमिषु भ्रमन्तस्ते सर्वे कुत्रापि नन्दयन्तीं न पश्यन्ति स्म यदा तदा विलक्षा बभूवुः । क्रमाद् भ्रमन् समुद्रदत्तो भृगुकच्छपुरे ययौ । क्षुधाक्रान्तश्च तत्रैव सत्रागारे समीयिवान् । समुद्रदत्तो वेपपरावृत्तिभृत् । एकां नारीं वीक्ष्य दध्यौ समुद्रदत्तः–इयं कीदृशी शीलविषये विद्यते ? । समुद्रदत्तेनैका स्त्री शिक्षयित्वा तस्याः पार्श्वे प्रेपिता सती जगौ–भो नन्दयन्ति ! मानुषं जन्म त्वया प्राप्तं । भोगसुखं विना कथं वृथा नीयते ? । यतः–

"पिब खाद च चारुलोचने !, यदतीतं वरगात्रि ! तन्न ते । ० ॥ १ ॥"

त्वं तु विचक्षणाऽसि । यदि तव रोचते तदैको वणिक्पुत्रो देवकुमारतुल्यः समायातोऽस्ति । तस्य भूयसी श्रीरस्ति । तं पुरुषमङ्गीकर्तुं सुराङ्गना अपि वाञ्छन्ति । यदि त्वं तस्याङ्गमङ्गीकुरुषे तदा तत्रातीव सुखं भवति । अहं तुभ्यं हितं वक्तुमागताऽस्मि । नन्दयन्ती जगौ–भगिनि ! त्वमत्रागता तद्वरं । पुनरीदृशजल्पनं न कर्तव्यं सत्या अग्रे । एवं जल्पन्त्या जिह्वा एव त्रुट्यति । अहं त्वस्मिन् भवे समुद्रदत्तं भर्तारं मुक्त्वाऽन्यं देवकुमारतुल्यमपि न वाञ्छामि । यद्यधिकं त्वं कथयिष्यसि तदा तवैवाहमात्महत्यां दास्यामि । अत्रान्तरे मूलस्वरूपं समुद्रदत्तः कृत्वा तत्रागात् । स्वां प्रियां दृष्ट्वा हृष्टः । साऽपि पतिं दृष्ट्वा निश्चयं कृत्वोत्थाय च सविनयं स्वागतं चकार । यतः–

"जाते मिथो दृगाश्लेषे, स्मृतप्राग्दुःखदुर्दशा । वृष्टिर्भाद्रपदीनेव, तदाऽश्रुभिरभूत्सती ॥ १ ॥

ततः समुद्रदत्तो हृष्टस्तां गृहीत्वा स्वपुरमागात् । पित्रादयोऽपि तत्राययुः । ततो नन्दयन्त्या स्वः सर्वः प्रवासस्थितिसम्बन्धः कथितः । इतश्च केवली ज्ञानभानुस्तत्र समागमत् । समुद्राद्यास्तत्र वन्दितुं ययुः । गुरुभिर्धर्मोपदेशो दत्त इति । [तथा हि] देशनान्ते नन्दयन्ती पप्रच्छ–भगवन् ! केन कर्मणा इयन्तं कालं मम पत्यादिभिः समं वियोगोऽभूत् ? । गुरुराह–चन्द्रपुरे मुकुन्दाह्वस्य द्विजस्य श्रीमती प्रियाऽभूत् । तयैकदा यज्ञोत्सवे जायमाने भिक्षार्थमागतः साधुरिति हसितः–भो शूद्र ! त्वमत्र कथमागाः ? । तदा सर्वैरपि श्वशुरादिभिरनुमतम् । स मुकुन्दो मृत्वा समुद्रदत्तोऽभूत् । श्रीमती त्वमभूः । तेन तव पत्या श्वशुरादिभिश्च सह वियोगोऽभूत् । ततो नन्दयन्ती विशेषतो धर्मं कृत्वा स्वशीलं पालयन्ती प्रथमस्वर्गं गता । ततश्च्युत्वा मुक्तिं गमिष्यति । इति नन्दयन्तीकथा समाप्ता ॥३७॥

## ॥ अथ रोहिणी कथा ॥

[३८]

**शीलं वितन्वतां पुंसां, शुद्धेन मनसा सदा । रोहिणीव सुखश्रेणीमरीणां[1] लभते चिरम् ! ॥ १ ॥**

तथाहि–पाटलीपुत्रे पुरे श्रीनन्दो मेदिनीपतिर्बभूव । तत्र धनावहः श्रेष्ठी अभूत् । तस्य प्रिया रोहिणीति नाम्ना जाता । धनावहः श्रेष्ठी समुद्रमध्ये धनार्जनाय चलितः । तदा रोहिणी वेणीबन्धमाधाय स्वशीर्षे सखीवृन्देषु निनाय दिवसान् धर्म-

१. अ–रीणाम्=सम्पूर्णाम्

कर्मभिः। धूलीकदम्बपुष्पौघधूसरिताम्बरो ग्रीष्मकालस्तदाऽऽगमत्। तदानीमुद्याने गच्छन् क्रीडार्थं श्रीनन्दभूपतिः वातायनस्थां रोहिणीं ददर्श। तदा स दर्शं दर्शं रोहिणीं तल्लीनचित्तो राजाऽभूत्। ततो भूपो गृहे समेत्य प्राभृतसंयुतां दूतीं प्राहिणोदुपरोहिणि। तत्र गत्वा दूती प्राह–त्वां नन्दभूपः कामयते। सफलीकुरु स्वं पुण्यं तारुण्यं तस्य सङ्गमात्। श्रुत्वेति रोहिणी दध्यौ–

अहो कुलमनालोच्य, निजमेष निरर्गलः। मत्तदन्तीव मे शीलद्रुममुन्मूलयिष्यति ॥ १ ॥

उपायैस्तावदयं बोध्यो भूपो यावन्मार्गे समेति। मत्वेति रोहिणी दूतीं प्रति प्राह–

सखि! स्वभावतो नार्यो, वाञ्छन्ति सुभगं स्वयम्। असावर्थयते मां तु, धिगस्तु तदमुं नृपम्!॥ १ ॥

अनाविलं कुलं किन्तु, शशिलक्ष्म्योरिवावयोः। तदेष च्छन्नमायातु, यामिन्यां सुभगाग्रणीः ॥ २ ॥

इति प्राभृतिमादाय, राज्ञः स्वीयं वितीर्य च। सद्यः प्रीतिपरामेनां, विससर्ज महासती ॥ ३ ॥

दूती पश्चादेत्य भूपपार्श्वे प्राह–स्वामिन्! रोहिण्योक्तं राजाऽत्राऽऽयातु। ततो राजा कृतस्फारशृङ्गारो रोहिणीसदनं ययौ। सिंहासने रोहिणीदासीविश्राणिते राजा निविष्टः। ततस्तत्र भूपतेः पुरो रोहिणी भूमिदत्तदृग् समाययौ। तदा तां दृष्ट्वा भूपतेः स्तिमितं चक्षुर्विष्वक् प्रसारितं बभूव। यावद्राजा धाष्टर्यमवष्टभ्य वक्तुमुपतिष्ठति तावद्रोहिणी रसवतीनिष्पादनाय सखी वृन्दमादिशति।

नृपस्य पुरतो न्यस्य, स्थूलं स्थालं लसत्फलैः। पूरयित्वा सखे! वर्यं, ढौकयस्व द्रुतं किल ॥ १ ॥

रोहिणीसखी स्वस्वामिन्याः प्रोक्तं चकार। ततस्तानि फलान्यास्वाद्य रसवतीं च भुक्त्वा चन्द्रशालायां राजा क्षणं सुप्तः। क्षणाज्जागरितः सन् भूपः पानकं पातुं ययाचे। ततोऽपि भुञ्जन् नवनवां रसवतीं क्वचित् सरसां क्वचिद्विरसां राजा प्राह—व्यञ्जनानां नानाविधैर्वेषवारैरनेकधा रसोऽत्र विद्यते कथम्!। रोहिणी जगौ—राजन्! ज्ञास्यते विवेकं वचः। यथा वस्तुषु रसविरसत्वे दृश्यते तथा स्त्रीषु दृश्यते। इयं स्त्री पुरुषं भ्रमे पातयति।

"जाज्वलीति यथा सूर्योपलः सूर्यविलोकनात्। तथा कामानलः पुंसां, मूढानां स्त्रीनिरीक्षणात्! ॥ १ ॥

स्वामिंस्त्वं सर्वासां प्रजानां गुरुरसि। प्रादुष्ष्यन्ति नरेन्द्रेभ्यो यतो न्यायप्रवृत्तयः। मार्गोल्लङ्घनं कर्तुं न युक्तं। स्त्री नरकखानिः। यतः—

"खानिर्नरकदुःखानां, ग्लानिः सुगतिसम्पदाम्। पत्तनं चैव पापानामपि वैषयिकं सुखम्! ॥ १ ॥"

एवं तद्वचनाज्ज्ञातवान् परनारीसम्भोगमनन्तदुःखदम्। राजा समुत्थाय रोहिणीं क्षमयामास, प्राह च—

सन्ति भद्रे दुराचारमुपदेष्टारः पदे पदे। हितार्थमुपदीकर्तुं, विरला एव केचन ॥ १ ॥

अस्माकं कुमार्गाकरनिषेधनात्त्वं गुरुरसि। ततस्तस्या गुणश्रेणीं शीलं च प्रशंसन् भूपः स्वावासं ययौ। इतोऽर्जितधनो धनावहः श्रेष्ठी स्वगृहमागात्। रोहिणी तदा स्वकान्तमुखचन्द्रदर्शनान्मुमुदेतराम्। एकदा चेटीमुखान्नरेन्द्रागमनोदन्तं श्रुत्वा श्रेष्ठी दध्याविति—

समासाद्य मधुश्छत्रं, वानरः क्षुधितोऽशनम्। काको दधिघटीं प्राप्य, विजने किमु मुञ्चति ? ॥ १ ॥
लावण्यामृतकुल्येयं, तथा प्रेयस्विनी मम। नृपेष्वतिथितां प्राप्य, सुशीला कथमस्ति तत् ? ॥ २ ॥

इत्यादि विकल्पशतानि चिन्तयन् श्रेष्ठी धनावहः प्रियां त्यक्तुकामोऽभूत्। इतो घनाघनस्तस्या रोहिण्याः कलङ्कमुत्तारयितुं समागात्। अथ सप्त दिनानि तथा मूसलधाराभिर्मेघो ववर्ष यथा नदीह्रदादिस्थानानि सर्वाणि परितो भृतानि बभूवुः। ततो नद्यो निजतटान्युल्लङ्घ्य प्रतोलीद्वाराण्यपि रोधयामास। ततः पुरीं पयसा प्लाव्यमानां दृष्ट्वा राजा दध्यौ–सा रोहिणी यदि प्रतोल्यां समेति तदा तस्याः शीलप्रभावात्! पानीयं विरमेत्। ततो रोहिणी आकारिता तत्र राज्ञा। प्रोक्तं च–भो भगिनि! त्वं पानीय निवारय!। ततो रोहिणी मनुष्येषु लक्षमितेषु पश्यत्सु पुरप्रतोल्या उपरि स्थित्वा नमस्कारं भणित्वा हस्तेन नीरमादाय प्राह–यदि मया शुद्धमस्मिन् भवे शीलं पालितं स्यात्तदाऽधुना जलोपसर्गो विरमतु।

गङ्गे! त्वदङ्गचङ्ग चेत् त्रिशुद्धया शीलमस्ति मे। निवर्तस्व पुरादस्मात्ताक्ष्यान्नागचमूरिव ॥ १ ॥

इत्युक्ते तया नद्याः पूरः क्षणाद्विरराम। ततो लोका हृष्टा जगुः–

अहो शीलमहो जैनधर्मोऽयमिति सर्वतः। भुवि व्योम्नि ध्वनिर्जातो, नृणां सुधाभुजामिव! ॥ १ ॥
अहो अस्या महासत्या, रोहिण्याः शीलमद्भुतम्। विद्यते सर्वलोकानामुपसर्गहरं खलु ॥ २ ॥

रोहिण्या वचनेन तदा बहवो जना जैनं धर्मं प्रपेदिरे। ततो राजा जगौ–अस्या यादृशं शीलमस्ति तादृशमन्यत्र कुत्रापि न दृश्यते। ततो नृपकान्तादिलोकयुक्ता रोहिणी सर्वेषु जिनचैत्येषु जिनवन्दनां पूजापुरस्सरं चकार। धनावहोऽपि हृष्टः

प्रियायाः शीलमाहात्म्यं दृष्ट्वा जिनधर्मं ललौ । एकदा रोहिणी धर्मोपदेशं श्रोतुं श्रीगुरुपार्श्वे गता । तदा श्रीगुरुभिरुक्तम्—

यो रोहिणीतपः शुद्धभावेन कुरुते सदा । स एव लभते सद्यः, स्वर्गापवर्गसम्पदम् , ॥१॥

रोहिण्याह—तपः कथं कार्यम् ? । गुरुणोचे—श्रीवासुपूज्यप्रतिमाग्रे रोहिणीनक्षत्रे उपवासः कार्यः । उद्यापनेन सहितः सप्त वर्षाणि सप्त मासांश्च यावदुपवासः कार्यः । श्रीवासुपूज्यप्रतिमा रोहिणीयुता कार्यते । एकनवतिर्मोदकादिवस्तूनि प्रभोः पुरो ढौक्यन्ते ।

तपः सकललक्ष्मीणां, नियन्त्रणमशृङ्खलम् । दुरितप्रेतभूतानां, रक्षामन्त्रो निरक्षरः ॥ १ ॥

यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते,
कामः शाम्यति दाम्यतीन्द्रियगणःकल्याणमुत्सर्पति ।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यः कर्मणां,
स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम् ? ॥ २ ॥

तद् रोहिणीतपः शुद्धमाराध्य रोहिणी शिवगमनयोग्यं पुण्यमर्जयामास । प्रान्ते शुद्धामाराधनां कृत्वा रोहिणी प्रथमे स्वर्गे जगाम । ततश्च्युत्वा मानुषं जन्म प्राप्य मुक्तिं गता । इति रोहिणीतपः उपरि रोहिणीकथा समाप्ता ॥३८॥

॥ अथ रति सुंदरी कथा ॥

३९

सुशीलरक्षणे वाञ्छा, विद्यते यस्य देहिनः । स एव लभते सातं, सुन्दरीव शुभाशयः ॥१॥

तथाहि-साकेतपुरे नरकेसरी राजा राज्यं करोति स्म। तस्य प्रिया कमलसुन्दरी। रतिसुन्दरी पुत्री चाभूत्। क्रमाद्यौ-
वनं प्राप्ता। अन्येद्यू रतिसुन्दरी प्रवर्तिनीं ववन्दे। गणिन्येति धर्मोपदेशो दत्तः। यथा-

"निधिं रोर इव प्राप्य, दुर्लभं मानुषं जनुः। ग्राह्यं धर्मफलं रत्नमिव बुद्धिमता ततः ॥ १ ॥
रत्नपूर्णे निधौ प्राप्ते, इव बालो वराटिकाम्। मूढो मोक्षफले भोगानीहते मर्त्यजन्मनि ॥ २ ॥
तस्माद् गृहाण सम्यक्त्वं, प्रतिपद्यस्व संयमम्। निर्मलं च तपस्तप्त्वा, भवपर्यन्तमाप्नुहि ॥ ३ ॥
तपःकृशानुना तप्तः, शीलोज्ज्वलजलोक्षितः। जीवः कर्ममलं मुञ्चत्यग्निशौचमिवाम्बरम् ॥ ४ ॥
शरीरं विशरारुश्रि, फलं तस्य तपःक्रिया। यावज्जीवं राजपुत्रि !, जिनधर्मे यतस्व तत् ॥ ५ ॥

इति प्रवर्तिनीवचः श्रुत्वा रतिसुन्दरी साधु साध्विदमिति जल्पन्ती प्राह-नाहं व्रतं लातुं क्षमा। तेन गृहस्थोचितं धर्मं
भवपोतालम्बनं प्रसद्य मे देहि। ततस्तयोक्तं-तर्हि सम्यक्त्वं गृहाण त्वं, शीलं पालय च शुद्धम्!।

स्वयं निवृत्यते पापात्, परश्चापि निवर्त्यते। इति शीलव्रतं पालयमन्यपुंवर्जनात्मकम् ॥ १ ॥
शीलादेवार्कचन्द्रान्तं, कीर्तिर्नृत्यति भूतले। शीलादेव च कल्याणस्थानं मुक्तिरवाप्यते ॥ २ ॥
कुलाङ्गनानामत्रैव, भवे सर्वमनोरथाः। एतत्प्रभावाज्जायन्ते, मेघादिव लताङ्कुराः ॥ ३ ॥
परलोके च संसारदुःखदौर्गत्यभूभृताम्। चिरं वज्रायुधीभूय, पारम्पर्येण मुक्तिदम्! ॥ ४ ॥

इति धर्मोपदेशं श्रुत्वा गुरूक्तं नियमं सम्यक्त्वशीलादियुतं ललौ रतिसुन्दरी। इतश्च नन्दनाह्वे पुरे चन्द्रभूभुजा स्वकार्याय

प्रहितो दूतः श्रीसाकेतात् समागमत् । देशस्वरूपकथनादनु दूतो रतिसुन्दर्या रूपसम्पदं जगौ । ततश्चन्द्रभूपस्तां वरीतुमीहमानो दूतं प्रेष्य नरकेसरीभूपान्तिके रतिसुन्दरीममार्गयत् । आत्मनः पूर्वं प्रीतिरस्ति । रतिसुन्दरीं यदि दास्यसि तदा विशेषतः प्रीतिर्भविष्यति । यतः–

"उत्तमैः सह साङ्गत्यं, पण्डितैः सह संकथाम् । अलुब्धैः सह मित्रत्वं, कुर्वाणो नावसीदति ॥ १ ॥

आरम्भगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती तु पश्चात् ।
दिनस्य पूर्वार्द्धपरार्धभिन्ना, छायेव मैत्री खलसज्जनानाम् ॥२॥

ततो योग्याभिसम्बन्धं, मत्वा साकेतनायकः । चन्द्राय भूभुजे दत्ता, नृपेण रतिसुन्दरी ॥ ३ ॥
रोहिणीमिवचन्द्राय दक्षां चन्द्राय तां ददौ । इति प्रत्यन्तरे

शुभेऽह्नि प्रेपिता राज्ञा, महर्द्ध्या मदने पुरे । लक्ष्मीरिव मुकुन्दाय, तस्मै जाता स्वयंवरा ! ॥ ४ ॥

सुमुहूर्ते तयोर्विवाहो जातो महामहः पूर्वम् ।

देवी वा खेचरी वाऽथ, किं वा पातालकन्यका । सौन्दर्यं रतिसौन्दर्या, दृष्ट्वेति जगदुर्जनाः ॥ १ ॥

ज्योत्स्नयेव तया चन्द्रः, प्रिययाऽलङ्कृतो नृपः । सर्वोपरिस्थितिं लेभे, क्षत्रनक्षत्रनायकः ॥ २ ॥

इतो महेन्द्रसिंह भूपोऽन्यदा कुरुपतिर्बली चन्द्रं दूतमुखेनाह मृगारिर्वा मृगाधिपं–देव ! त्वया सहास्माकं कुलक्रमागता प्रीतिरस्ति चिरम् ।

पद्मानामिव सूर्येण, समुद्रेणेव वारिधेः। कैरवैरिव चन्द्रस्य प्रीतिश्च जायते यथा ॥१॥
ततः कुलक्रमागता प्रीतिर्न लुप्यते। यतः—
"कुलोद्योतकराः पुत्रास्ते एव महिमास्पदम्। सम्बन्धं पूर्वजाचीर्णं, ये न लुम्पन्ति सात्त्विकाः ॥ १ ॥
सौजन्यं सद्भिर्न मुच्यते। किं च—वर्यप्रीतिविवृद्ध्यर्थं नवोढा रतिसुन्दरी अस्मभ्यं प्रेष्या प्राभृते। दूतवचः श्रुत्वा चन्द्र ईषत् स्मित्वा समालपत्—

सौजन्यं कस्य नाभीष्टं, ज्योत्स्नेवामृतदीधितेः ?।

परोपकारो मैत्री च, दाक्षिण्यं प्रियभाषणम्। सौशील्यं विनयस्त्यागः, सज्जनानां गुणा अमी !॥ १ ॥

तद्दूत ! तव भूपेन, साधूदितमिदं मम। नहि लुम्पन्ति मर्यादां, कुल्याः कुल्यापति यथा ॥ २ ॥

कः प्रियां स्वीयां कस्मै दत्ते जीवन् सन् ?। दूतः प्राह—नैवं वक्तुं ते च युज्यते।

मर्यादां लुम्पमानो हि ध्रियते केन वारिधिः ?। विधातुं सेतुबन्धं वा, क्षुब्धे तस्मिन्नलं हि कः ? ॥ १ ॥

स राजाऽतीव बलवानस्ति। यस्य सेनाभारेण पृथ्वीं कम्पयामास। अतस्त्वया सामवाक्यमेव वक्तव्यम्। अथ रुष्टश्चन्द्रो राजा जगौ—रे दूत ! तव स्वामी मम प्रियां वाञ्छन् स्वभ्रं गन्ता; कुलीनस्तव स्वामी श्रूयते स एवं कथं वक्ति ?। यतः—

"प्राहिणोति निजां भार्यां, कोऽपि किं परमन्दिरे ?। गृह्यते केन रत्नं हि, जीवतः पन्नगेशितुः ? ॥१॥"

रक्ष्यो यथा तथा स्वात्मा, राजनीतिरिति स्मृता। जीवतो जायते भद्रं, मृतस्य न हि किञ्चन ! ॥ १ ॥

त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत् ॥२॥

इत्यादि दूतो गदन् कण्ठे धृत्वा राज्ञा सभाया वहिः कर्षितः । गत्वा दूतः स्वाम्यन्ते चन्द्रचेष्टितं प्राह । ततो रुष्टोऽखिलं वलं सन्नह्य प्राचालीन्महेन्द्रभूपः समुद्र इव सैन्ययुग् । तं भूपं समागच्छन्तं श्रुत्वा युद्धाय सज्जीभूतो राजा चन्द्रः सम्मुखोऽगात् । क्रमात्तयोर्भूपयोर्महायुद्धं भटाभटि खड्गाखड्गि अस्यसि बभूव । महेन्द्रसिंहेन चन्द्रो जीवन्नेव बद्धः । स्वयं तु चन्द्रसैन्येषु नश्यत्सु हरिरिव मृगी रतिसुन्दरीं महेन्द्रसिंहो जग्राह । विमोच्य चन्द्रं राजा रतिसुन्दरीं लात्वा तुष्टः स्वपुरमागान्महेन्द्रसिंहः । प्राह चैनां प्रति–भद्रे ! त्वदर्थोऽयमसमारम्भः सर्वः । भृङ्गो भृङ्गीमिवाहं त्वामेव बहुकालादवाञ्छं । ततो मम प्रिया भूत्वा स्वं जन्म सफलीकुरुष्व । श्रुत्वेति चन्द्रप्रिया दध्यौ–धिङ्, मे रूपेण भर्ता ईदृशीं दशां प्राप्तः । दध्यौ चैवं पुनः—

असौ कामी दुराचारो, द्यूतकार इवोत्सुकः । अपर्यालोच्य मच्चित्तं, धिगीदृशमधिष्ठितः ॥१॥
तस्मान्मया कथंकारं, शीलं रक्ष्यमतः परम् । सौनिकापणबद्धेन, छागेनैवात्मजीवितम् ॥२॥
यद्वा कालविलम्बो हि, श्रेयसे प्राणसङ्कटे । नीतिवाक्यमितिस्मृत्वा, सा साम्नैवं तमालपत् ॥३॥
गाढानुरागिता ज्ञाता, मयि श्रीनरकुञ्जर ! । अतोऽर्थयामि किञ्चित्त्वां, विफलीकुरुषे न चेत् ॥४॥
भूपोऽभाषत रम्भोरु !, किमिदं प्रार्थनावचः ? । त्वदर्थं व्यापृता ह्येते, प्राणा अपि तृणाय मे ॥५॥
यो ददाति शिरः सुभ्रु !, चक्षुः किं तेन नाप्यते ? । अतोऽतिदुर्लभमपि, प्रार्थ्यतां पूरयामि ते ॥६॥

ततो रतिसुन्दर्योक्तं—

अधुना तव वाक्येन, पर्याप्तमपरेण मे। मा कुर्या ब्रह्मभङ्गं मे, यावन्मासचतुष्टयम् ! ॥७॥

नृपोऽवग्—यत्त्वयोक्तं तन्न मे रोचते तथापि त्वदुक्तमस्तु। ततो रतिसुन्दरी आचाम्लादि तीव्रं तपः कुर्वाणा स्नानाङ्गभूषणादीनि वर्जयामास। ततः प्रतिदिनं तपस्तपस्यन्ती कृशतनुरभूत्। तादृशीं दुर्बलगात्रीं रतिसुन्दरीं दृष्ट्वा राजा प्राह—भो कुरङ्गाक्षि ! किमवस्था तवेदृशी ?। किं कोऽपि रोगो दोषो वा तवादृश्यो विद्यते ?। साऽप्याह—वैराग्यं मम विद्यते। तीव्रं तपः क्रियमाणमस्ति। चतुर्मासं यावन्मया आचाम्लतपः कर्तव्यं। यदि त्वं व्रतभङ्गं करिष्यसि तदा तव ममापि च श्वभ्रपातो भावी। पप्रच्छ भूपः—वैराग्यहेतुः कस्ते? यदीदृशं भोगयोग्यं वपुः क्षिप्तं तपोऽग्नौ पुष्पदामवत्। पतिव्रता प्राह—इदं देहं कुत्सितमस्ति।

वसा-सृङ्-मांस-मेदोऽस्थि-पित्त-विण्मूत्र-रक्तकम्। श्रवत्येतद्वपुर्द्वारैर्नवभिः पूतिगन्धिताम् ॥१॥

मुहुर्विलेपनस्नानधूपनादिभिरप्यदः। सुसंस्कृतं स्वदौर्गन्ध्यं, न मुञ्चति कथञ्चन ॥२॥

अन्तर्बहिश्च भोगाङ्गं, यद् यदस्योपनीयते। उपकारः खलस्येव, तत्तद्वैरूप्यमश्नुते ॥३॥

अशुचीनां निधीभूतं, दृश्यमानं मनोहरम्। वैराग्यं कस्य नो कुर्याद्वैरस्यं च सदा वपुः ? ॥४॥

तेन तपो विना नात्मा शुध्यति। राजा जगौ—त्वमात्मीयं तपः सम्पूर्णं कुरु। पूर्णे तपसि राजा जगौ—अद्य मे वाञ्छितं पूरय भद्रे !। तयोक्तम्—अद्य पारणं विद्यते। शासनदेवीं ततः सा सस्मार। ततस्तां प्रति प्राह रतिसुन्दरी—स्वामिनि ! त्वं तथा कुरु यथा मदीयं शीलं तिष्ठति। ततस्तया देव्या तस्यास्तथा रूपं कुत्सितं कृतं यथा राजा तां गलत्कुष्ठादिव्याधिग्रस्तां

ताम् ताद्दशीं दृष्ट्वा राजा दध्यौ–इदं देहमशुचि यतः ततः सारं पुण्यमेव । मया परदारा एषा मुधा गृहीताः । ततो राज्ञा चन्द्रभूपायार्पिता । दिव्यरूपा जाता रतिसुन्दरी शीलस्य प्रभावात् । ततो मिथो राज्ञोः प्रीतिरभूत् । देव्या कृतं सान्निध्यं शीलं च निश्चलं ज्ञात्वा राजा तां प्रशशंस । रतिसुन्दरी शीलप्रभावात्स्वर्गं गता । ततो मुक्तिं यास्यति ॥ ३९ ॥

इति रतिसुन्दरी कथा समाप्ता ॥

॥ अथ श्रीमती कथा ॥

४०

तस्य यशांसि गीयन्ते, स्वर्गे देवाङ्गनादिभिः । यस्य शीले भवेत् प्रीतिः, श्रीमत्या इव सन्ततम् ! ॥१॥

तथाहि–श्रीराजपुर्यां जयद्रथो राजा राज्यं करोति । धनदत्तश्रेष्ठ्यभवत्तत्र । तस्य प्रिया धनश्रीः । पुत्राः क्रमात्सप्ताभूवन् । ततः क्रमात् पुत्रीं वाञ्छन्त्या धनश्रियः पुत्री बभूव । तस्या जन्मोत्सवं कृत्वा श्रीमतीति नाम दत्तम् । कदाचित् पल्लीशः शत्रुमर्दनस्तां पुरीं बभञ्ज । तदा पुरीजनः स्वं जीवितं लात्वा ननाश । तस्मिंस्त्रासे जायमाने धात्री श्रीमतीं पालनस्थामादाय बिभ्यती वने ययौ । श्रीमतीं वहन्ती धात्री तं पालनकं कस्यामपि न्यग्रोधतरुशाखायां सबाष्पमुदलम्बयत् । तृषार्ता धात्री पानीयपानाय बभ्रामारण्यमध्ये । इतो रत्नपुराद्रत्नशेखरभूपपालितात् जिनदत्तः सार्थप आययौ । जनपदान्तरे वहुद्रव्यमुपार्ज्य पश्चादागच्छन् तस्मिन् वने सपालनकशाखिसमीपे तस्थौ । तत्र सार्थेशसेवका वनान्तर्भ्रमन्तो वृक्षशाखायां बद्धं

पालनकं काकोलेनान्दोल्यमानं व्यलोकन्त। वनश्री यामिकीभूय द्विकरूपेणोल्लापयन्ती तं बालकं तस्थौ। वनश्रीः पश्चैते उल्लापनानि गायति।

असङ्ख्यपितृपक्षे त्वं, मा रोदीर्नित्यभूषणे!। अदुःखदाऽस्यतो जीव, पतिवत्नि सुतोचिते ॥ १ ॥

इति उल्लापनानि पश्चापि सप्रपंचानि तस्या दीयमानानि श्रुत्वा ते नराः सार्थपतेः पार्श्वे न्यवेदयन्। ततः सार्थेशो नवभिः पुत्रैः समं तत्र न्यग्रोधे गत्वा तां बालिकां तथावस्थां ददर्श। दध्यौ च

क्षिप्ताऽपहृत्य केनापि, स्वैरिणा पूर्ववैरिणा। बालाऽप्यबाललावण्या, विजने विपिने हहा ॥ १ ॥

गुप्तप्रसूनसौरभ्यवासितेष्वथ सूनुषु। नवस्वनवमा ज्येष्ठा, ममादायि वनश्रिया ॥ २ ॥

ध्यात्वेति तां बालां स्वप्रियायै विश्राण्य सार्थपो जगौ–इयं नन्दिनी तुभ्यं नवपुत्रेषु मङ्गलकारिणी वनदेवतया दत्ता, तेन विशेषतोऽनिशं पालनीया। धात्रीभिस्तस्याः शुश्रूषां कारयन् सार्थपः स्वपुरं ययौ। वर्द्धमाना क्रमाद् गुणैरनर्घ्यैर्दर्शनीयाऽभूत्। अन्यदा सा बाला नूपुररणत्कारशब्दकृताडम्बरा सखीभिः सह गच्छन्ती श्रीमती गवाक्षोपरिस्थेन भूपेन दृष्टा। ततो व्याघुट्य घोटकं राजा सार्थपगृहद्वारे समागाद् यावत्तावत्सार्थपो राजानमागच्छन्तं श्रुत्वा सम्मुखं समेत्य प्रणणाम। तत्र सिंहासनाधिरूढो राजा पप्रच्छ सार्थेशं कस्येयं बाला रूपलावण्यावर्जितसुरसुन्दरी ?। सार्थपो जगौ–एषा मत्पुत्री विद्यते। मम वने घटिताऽभूत्। यतो मयाऽसौ पुत्रीतिकृत्वा स्थापिताऽस्ति पुत्रमङ्गलकारिणी। अस्या विरहं क्षणमप्यहं न सहे। ततो राजाऽवक् मम पुत्राणां शतं विद्यते। तथापि तेषां मङ्गलकारिणी भवतु। द्वयोरपि पुत्री अदुःखदर्शिनी वर्द्धते!

क्रमाद्विवाहयोग्यां ज्ञात्वा सुमतिसार्थेशपुत्राय मदनाय दत्ता । तदा तस्या बिरुदावलीं श्रोतुमनेके जनाः समायान्ति । भूरिद्रव्यव्ययं मत्वा सार्थपतिः प्राह—भवदीया अन्तःपुर्यः समायान्ति, तासां तादृशीं भक्तिं कर्तुं न शक्यते तेन कलिः समायान्मद्गृहे पुत्रीसमागमच्छलात् । ततः सर्वो जनस्तत्र गच्छन् निषिद्धो राज्ञा । अन्यदा सदाभूषणाऽसाविति बिरुदं तस्याः श्रुत्वा सुमतिर्निशि श्रीमत्या आभूषणानि मञ्जूषाया अपहृत्य छन्नं पुरोपान्ते ह्रदमध्ये मुमोच । ततः स्वगृहमेत्य च सुप्तः । इतः प्रातर्यावन्मञ्जूषां भूषणरिक्तां श्रीमती यावत् पश्यति तावदित एको मात्स्यिकोऽभ्येत्य भूपस्य तानि भूषणानि दत्त्वा प्राह—मया मत्स्यो विदारितस्तस्योदरान्निर्गतान्येतानि वस्तूनि । सुमतिकृतमेतत्परीक्षाहेतवे ज्ञात्वा राजाऽवग्—त्वं मुधाऽस्याः परीक्षां कुरुषे । मदुक्तं तु नान्यथा स्यात् ।

अमोघा वासरे विद्युदमोघं निशि गर्जितम् । नारीबालवचोऽमोघममोघं देवदर्शनम् ॥ १ ॥

एकदा मदनं हन्तुमनेके सुभटाः समायाताः । तदा दैवयोगान्मदनस्थानेऽन्यो हतः । एकदा मदनो वार्द्धौ चचाल । तत्रापि याने भग्ने प्राप्तफलकः स्वग्रामं समागात् । तया श्रीमत्या क्रमात् पुत्रा बहवो जनिताः । तस्याः पुत्रो न ह्येकोऽपि मृतः । इतो माता धनश्रीरपि तत्राभ्येत्य मिलिता सपुत्रा । इतश्चतुर्ज्ञाननिधयः श्रीगुरवस्तत्र समाययुः । भूपः सुमतिमन्त्रिप्रभृतिपरिवारयुतो वन्दितुं गतः । तत्र धर्मोपदेशं श्रुत्वाऽवदत्—भगवन् ! श्रीमत्याऽनया किं कृतं सुकृतं पूर्वभवे ? । गुरुराह—गर्जनाह्वे पुरे द्विजो ज्वलनाभिधो भट्टः दुस्थः । तस्य रेवती प्रिया । अष्टौ क्रमात्तस्याः पुत्र्योऽभूवन् । अष्टावपि परिणायिता दुःखेन । पुनर्नवमी जाता । सा नवमी पुत्र्यनादरादपि क्रमेण ववृधेऽरण्यलतावत् । साऽथ मातापितृभ्यां माणवकस्य भिक्षो-

विश्राणिता । स माणवकस्तां परिणीय पर्यटत् पृथ्वीम् । स्वग्रामे समेत्य जननीं सप्रियो ननाम । स्नुषां नमन्तीं श्वश्रूराशीर्वादददानात्समभावयत् । क्रमाद्रोगाक्रान्ता श्वश्रूः परलोकमसाधयत् । माणवकेन मातुरौर्ध्वदेहिकं चक्रे । धनमपि नष्टम् । ततः सप्रियो माणवको महति तृणकुटीरे संवसति । अन्यदाऽनामिका द्विजपत्नी विमलश्रीप्रवर्तिनी पार्श्वे ययौ । तदा धर्मोपदेशस्तपोविषये दत्तः प्रवर्तिन्या । यथा—

"पोरसि चउत्थ–छट्ठे काउं कम्मं खवंति जं मुणिणो । तं नो नारयजीवा, वाससयसहस्सलक्खेहिं ! ॥१॥

यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम् । तत्सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ २ ॥

[1]अदुःखदर्शिनीत्याख्यं तपो यः कुरुते तस्य दुःखं नायाति । तपःस्वरूपं प्रोक्तव्यमत्र । उद्यापने पालनकं रूप्यमयं काञ्चनमयी पुत्रिका पुरः स्थालं शर्कराढ्यस्थूलमोदकराशिभृत्, तत्सर्वं साधूनां दातव्यं, ततः सदशशाटकं वस्त्रं वितीर्यते । तत एतच्छ्रुत्वा तया तपः कृतम् । उद्यापनमपि कृतं तया द्विजपत्न्या । तस्य तपसः प्रभावान्मृत्वाऽसौ श्रीमती जाता । ततो देवलोके देवोऽभूत् । ततश्च्युत्वा भवान्तरे मुक्तिमपि गमिष्यति ततस्तस्याः श्रीमत्या एतच्छ्रुत्वा जातिस्मृतिरभूत् । पश्चाद्भवं दृष्ट्वा विशेषतस्तया तपश्चक्रे । उद्यापनमपि कृतम् । इति तपः कृत्वा श्रीमती देवलोके गता । ततश्च्युत्वा राजपुत्री बभूव । ततो वैराग्यात् संयमं प्राप्य पुण्यपापफलं भुक्त्वा कर्मक्षयात् मुक्तिं गता ॥

इति अदुःखदर्शिनीतपःपरायाः श्रीमत्याः कथा तपसि विषये समाप्ता ॥४०॥

---

१. अस्य तपसः स्वरूपं परिशिष्टे दर्शितमस्ति । दृश्यतां पृ. १५९

## [ अथ प्रशस्तिः ]

श्रीचन्द्रगच्छाम्बरभूषकोऽभूत्तपागणो भानुरिवेद्धदीप्तिः ।
प्रबोधयन् भव्यजनाम्बुजालीं, स्वगोविलासैरिव साधुवर्गैः ॥ १ ॥ [ उपजातिच्छन्दः ]

तत्राभवन् वरगुणगणमणिरोहणमहीधरप्रतिमाः ।
परमगुरुसोमसुन्दरगुरवः संयमरमापतयः ॥ २ ॥

तच्छिष्या मुनिसुन्दरगुरवो जयचन्द्रसूरयोऽभूवन् ।
पारगतागमजलनिधिपारगता रुचिरगुणनिलयाः ! ॥ ३ ॥

तच्छिष्या विजयन्ते, दधतः श्रीसूरिमन्त्रमहिमभरम् ।
श्रीयुक्तरत्नशेखरगुरव उदयनन्दिसूरिवराः ॥ ४ ॥ [ आर्यावृत्तानि ]

लक्ष्मीसागरसूरीशाः सोमदेवाह्वसूरयः ।
विजयन्ते लसद्विद्यावार्द्धिमन्थनमन्दराः ॥ ५ ॥ [ अनुष्टुब्वृत्तम् ]

श्रीमन्मुनीशमुनिसुन्दरसूरिराजशिष्यो मनीषिशुभशील इति प्रमुख्यः ।
एतां कथां वितनुते स्म नवांबरेषुचन्द्रप्रमाणसमये [१५०९]
किल विक्रमार्कात् ! ॥६॥ [वसन्ततिलकावृत्तम् ]

'भरहेसरबाहुबलीवृत्तिः' शुभशीलविबुधरचितेयम् ।
शोध्या सुबुद्धिमद्भिर्विबुधैः कूटापसारणतः ॥ ७ ॥ [ आर्यावृत्तम् ]
अनाभोगादिना किञ्चिद्यदत्रोत्सूत्ररोपणम् ।
चक्रे तदस्तु मे मिथ्यातमोऽर्हदादिसाक्षिकम् ॥ ८ ॥ [ अनुष्टुब्वृत्तम् ]

इति श्रीमत्तपागच्छाधिराज–श्रीमुनिसुन्दरसूरिशिष्य–पण्डित–शुभशीलगणिविरचिते
भरहेसरबाहुबलीवृत्तिनाम्नि कथाकोशे द्वितीयो महासत्यधिकारः समाप्तः ॥ २ ॥

इति श्रीभरहेसरबाहुबलीवृत्तिः सम्पूर्णा ॥
॥ इति शम् ॥

હસ્તલિખિત પ્રતિની પુષ્પિકા–[ પગથીયાના ઉપાશ્રયનો જ્ઞાનભંડાર અમદાવાદ. ]

संवत १५७७ वर्षे माघ मासे कृष्णपक्षे एकादश्यां पुण्यतिथौ रविवासरे पूर्वाषाढ नक्षत्रे सिद्धनाम्नि योगे अद्येह श्री पत्तनमध्ये पूर्णिमापक्षे भ. श्री श्री श्री श्री श्री श्री रत्नतिलकसूरि तच्छिष्य वा. श्री कनकसुंदरेण स्ववाचनार्थं इदं चरित्रपुस्तक [स्तिका] लपिता ॥ श्रेयोऽत्र कल्याणं भूयात् ॥ श्री पत्तनमहानगरे लिखिता ॥

## परिशिष्ट : १ श्रीदेवी कथा

आ श्रीदेवीनी कथा सामान्य रीते ह. लि. ग्रन्थोमां मळती नथी. मात्र आवी कोक कोक प्रतमां ज मळे छे. आ बीजा भागनुं पण मुद्रण थई गया पछी आ कथा मळी. तेथी अहीं परिशिष्टमां आपी छे.

श्रीपुरे श्रीधरभूपः श्रीदेवीराज्ञी । एकदा सप्रियो राजा उद्याने क्रीडितुं ययौ । तत्र कमलकेतुना विद्याधरेण श्रीदेव्यकस्माद् जह्रे । स्वस्थानं नीता । विद्याधर प्रार्थनां चक्रे भोगाय ।

यतः स्वाधीनेऽपि कलत्रे .. ॥१॥ यदकारिकर्म ... ॥२॥ अप्पउं धूलिहि मैलिउं.... ॥३॥

श्रीदेवी कर्णौ पिधाय जगौ, एवं नोच्यते । परस्त्रीगमने श्वभ्रपातः स्यात् । शीलतस्तव स्वर्गसुखम् ।

यतः–देवदाणवगंध० ॥४॥ अलसा हो ह अकज्जे० ॥५॥

इत्यादि वाग्भिः प्रबोधितः खेचरस्तां श्रीपुरे मुमोच । एकदा तत्पुरे कोऽपि देवः समेत्य राज्ञीमाह–अहं त्वदर्थी अत्रागाम् । मया सह आगच्छ । यथा तव कुशलं स्यात् । तया श्रीदेव्या ऊचे । त्वं देवः अहं मानवी कथं योगः स्यात् । अहं प्राणात्ययेऽपि स्वपतिं विना नान्यमिच्छामि । देवस्तुष्टो जगौ त्वं महासतीति । श्रीदेवी पंचमस्वर्गे देवोऽभूत् । ततश्च्युतो वीरपुरे वीरभद्रश्रेष्ठिपुत्रो मदनाह्वोऽभूत् । स गुरुपार्श्वे धर्मं श्रुत्वा दीक्षां लात्वा प्रपाल्य च क्षीणकर्मा मुक्तिं ययौ श्रीदेवीजीवः ॥

इति श्रीदेवीकथा ॥

पू. आ. विजय जम्बूसूरिजी हस्त लिखित कोश–डभोइ क्र. नं–१६०४
पत्र १११ थी २२१ (अधूरा पत्र) १९० उपर श्रीदेवी कथा छे. लेखन सं. १६६७ पोष सुदि–१२ सोमवार
संवत् १६६७ वर्षे पोष सुदि–१२ सोमे लखितं श्री आगमगच्छे उपाध्याय श्री गुणसुंदर शिष्य नानाकेन लखितमस्ति ॥

## परिशिष्टः २

પૃ. ૧૫૭ ઉપર શ્રીમતીકથા છે તેમાં આ તપનો ઉલ્લેખ છે. તે તપનું સ્વરૂપ અહીં આપ્યું છે.

### અદુઃખદર્શી તપ. (માસ ૧૫)

શુક્લપક્ષેષુ કર્તવ્યાઃ ક્રમાત્પંચદશસ્વપિ । ઉપવાસાસ્તિથિષ્વેવં પૂર્યતે વિધિનૈવ તત્ ॥

દુઃખ જોવાનો જેનો સ્વભાવ નથી તે અદુઃખદર્શી (અદુઃખ દેખી) નામનો તપ કહેવાય છે. તેમાં પ્રથમ શુક્લ પક્ષની એકમને દિવસે ઉપવાસ કરવો, પછી બીજે માસે શુદ બીજનો ઉપવાસ કરવો. પછી ત્રીજે માસે શુદી ત્રીજનો ઉપવાસ કરવો. એ પ્રમાણે ચડતા ચડતા પંદરમે માસે પૂર્ણિમાનો ઉપવાસ કરવો. એ રીતે કરતાં પંદર માસે કુલ પંદર ઉપવાસ વડે આ તપ પૂર્ણ થાય છે. આ તપ કરતા જો કોઈ તિથિ ભૂલી જવાય તો તપનો આરંભ ફરીથી કરવો. ઉદ્યાપને શ્રી ઋષભદેવની પૂજા કરવી. રૂપાનું વૃક્ષ કરાવવું. તેની શાખા સાથે સુવર્ણનું રેશમી પાટીવાળું પારણું [ઘોડીયું] ટાંગવું. તેમાં રેશમી તળાઈ પાથરવી. તે ઉપર સુવર્ણની પુતળી સુવાડવી. પંદર પંદર પક્વાન, ફળ, રૂપાનાણું વિગેરે ઢોકવાં. તથા પંદરે માસની તપની તિથિએ નવા નવા નૈવેદ્ય, પક્વાન, ફળ વિગેરે ઢોકવાં. સંઘપૂજા, સંઘવાત્સલ્ય કરવું. આ તપનું ફળ સર્વ દુઃખનો નાશ થાય તે છે. આ શ્રાવકને કરવાનો અગાઢ તપ છે.

**બીજી રીતે** દરેક પખવાડીયાની તિથિએ ઉપર પ્રમાણે ચડતા ચડતા ઉપવાસ કરવા. તેમ કરવાથી પંદર પખાડીયે તપ પૂરો થાય છે.*

* આ તપનુ નામ નાનો પખવાસો પણ કહેવાય છે. (આ તપમાં તિથિ ભૂલી જવાય તો બીજી આવતી તિથિ લઈ શકાય છે પણ ફરી શરૂ કરવો પડતો નથી.)

"શ્રી ઋષભસ્વામિ અર્હતે નમઃ" આ પદની નવકારવાળી વીશ ગણુવી. સાથીયા વિગેરે બાર બાર કરવા.

## અદુઃખદર્શી તપ (બીજો) (દિવસ–૩૦)

**ત્રીજી રીતે** એવી છે કે–એકાંતરા પંદર ઉપવાસ તિથિના નિયમ વિના જ કરવા. બાકી ઉદ્યાપન વિગેરે ઉપર પ્રમાણે કરવું. ગણુણું વિગેરે નીચે પ્રમાણે—

| | | સા૦ | ખમા૦ | લો૦ | નો૦ |
|---|---|---|---|---|---|
| ૧ | શ્રી કુંથુનાથ પારંગતાય નમઃ | ૧૭ | ૧૭ | ૧૭ | ૨૦ |
| ૨ | ,, શીતલનાથ પારંગતાય નમઃ | ૧૦ | ૧૦ | ૧૦ | ૨૦ |
| ૩ | ,, આદિનાથ પરમેષ્ઠિને નમઃ | ૧ | ૧ | ૧ | ૨૦ |
| ૪ | ,, શ્રેયાંસનાથ પારંગતાય નમઃ | ૧૧ | ૧૧ | ૧૧ | ૨૦ |
| ૫ | ,, ધર્મનાથ પારંગતાય નમઃ | ૧૫ | ૧૫ | ૧૫ | ૨૦ |
| ૬ | ,, નેમિનાથ-સર્વજ્ઞાય નમઃ | ૨૨ | ૨૨ | ૨૨ | ૨૦ |

| | | | | | |
|---|---|---|---|---|---|
| ૭ | ,, ચંદ્રપ્રભ સર્વજ્ઞાય નમઃ | ૮ | ૮ | ૮ | ૨૦ |
| ૮ | ,, અભિનંદન પારંગતાય નમઃ | ૪ | ૪ | ૪ | ૨૦ |
| ૯ | ,, મુનિસુવ્રત પારંગતાય નમઃ | ૨૦ | ૨૦ | ૨૦ | ૨૦ |
| ૧૦ | ,, અરનાથ પારંગતાય નમઃ | ૧૮ | ૧૮ | ૧૮ | ૨૦ |
| ૧૧ | ,, મલ્લિનાથ પારંગતાય નમઃ | ૧૯ | ૧૯ | ૧૯ | ૨૦ |
| ૧૨ | ,, અરનાથ સર્વજ્ઞાય નમઃ | ૧૮ | ૧૮ | ૧૮ | ૨૦ |
| ૧૩ | ,, ઋષભદેવ પારંગતાય નમઃ | ૧ | ૧ | ૧ | ૨૦ |
| ૧૪ | ,, વાસુપૂજ્ય પારંગતાય નમઃ | ૧૨ | ૧૨ | ૧૨ | ૨૦ |
| ૧૫ | ,, સંભવનાથ નાથાય નમઃ | ૩ | ૩ | ૩ | ૨૦ |
| ૧૬ | ,, મહાવીર પારંગતાય નમઃ | ૨૪ | ૨૪ | ૨૪ | ૨૦ |



# પરિશિષ્ટ—૩

(चन्दनबाला कथा–(પૃ. ૬૧) આવતી જુની ગુજરાતી ગાથાના શુદ્ધ પાઠ અને અર્થ અહીં આપ્યા છે.)

अप्पउं धूलिहि मेलिउ सयणह दीधउं छार । पगि पगि मांथा ढंकणउ जिणि जोइ परनारि ॥१॥

જેણે પરસ્ત્રી કુદૃષ્ટિથી જોઇ તેણે પોતાના આત્માને ધૂળથી મેલો કર્યો અર્થાત્ તેની આબરૂમાં ધૂળ પડી. સ્વજનોની કીર્તિ ઉપર રાખ ઉડાડી અને ડગલે પગલે પોતાનું નીચા જોણું કર્યું.

हउं छांडी ने छांडयो नेह, भली माइ तूं भलउ सनेह । खणु अधखणु नफिरातउं घडी, हुं कां न मुइ परहथि चढी ॥

હે મા ! તેં મને છાંડી અને મારા ઉપરના સ્નેહને પણ તેં છાંડયો (છોડયો–તજ્યો.) (પછી કટાક્ષમાં કહે છે) મા તુંય ભલી અને તારો સ્નેહ પણ ભલો. એક ક્ષણ કે અરધી ક્ષણ પણ તારા મારા ઉપરના સ્નેહમાં ફેરફાર થતો નહતો. (અરે !) હું પણ પરના–બીજાના હાથે ચઢીને કાં ન મુઇ–કેમ મરી ન ગઇ.

वसुमती विलगी पाइ जाइवा नही देउं माइ । जिसी भावइ तिसी थाइ पण मूरहइ लेइ साथइ जाइं ॥

વસુમતી (ચંદના) માતાના પગે વળગીને કહે છે: હે મા તને જવા નહીં દઉં જેવો ભાવિભાવ હશે તેમ થશે પણ તું મને સાથે લઇને જા.

पाणि तणइ वियोगि कादव जिम फुटइ हिआं । तिम जइ माणस हुंति साचउ नेह पतीजइ ॥

જેવી રીતે પાણીના વિયોગમાં કાદવમાં જેમ તિરાડ પડે છે.– ફાટ પડે છે. તેમ સાચો સ્નેહ જો હોય તો માણસને

પણ તેમ થવું જોઇએ. જો તેમ થાય તો જ તેનો સ્નેહ સાચો છે તેમ પ્રતીતિ થાય-ખાત્રી થાય.

अति वल्लहा मू आह, पाणी पापिणिं नीसरइ। जाणउ साचउ सनेह, जउ लोअणि लोही वहइ ॥

ખૂબ વ્હાલા જણનું મૃત્યુ થાય ત્યારે પાંપણમાથી પાણી ટપકે છે. પણ લોચનમાંથી લોહી વહે ત્યારે જ તો સાચો સ્નેહ કહેવાય-જણાય.

तुं लूसी आवीउ परराठ, तइं मारिसी तर खाइसि काठ। ऊतर पडऊतर मन मांड जउ मइं काज तु छोडी छांडि ॥

તું પરાજય લૂંટીને આવ્યો છે. તને મારીશ અથવા હું કાષ્ઠ ભક્ષણ કરીશ-એટલે કે અગ્નિસ્નાન કરીશ. તું તારા મનમાં ઉત્તર-પ્રત્યુત્તર ન માંડ.(ટૂંકાણમાં તને કહુ) જો મારું કામ હોય એટલે કે મારો તને ખપ હોય તો આ છોકરી તું છાંડી દે-ત્યજી દે.

सउकि रूपि जइ आवइ दासी, तो न धीरउं आपण पासि। सउकि सरिसउ जइ आवइ राज तिणि राजइं अम्ह नथी काज ॥

શોક સ્ત્રી પણ જો દાસી થઇને આવે તો પણ તેને મારી પાસે ન રાખું. (અરે ! શોકની સાથે રાજ્ય આવતું હોય તો એ રાજ્યનું પણ મારે કામ નથી. એટલે કે રાજ્ય સાથે આવતી શોક મને મંજૂર નથી.

सउकि सरिसी कंचन कोडी, जेहिं दीसि जे डोला फोडि। थोडाउं घणउं लहइ तो वीकि नही तरि वेगिं छांडी मुंकि ॥

કરોડ સોનૈયા સાથે શોક આવે તો તેને રોજ જોવી અને રોજ આંખો ફોડવી. (એના કરતાં) એને વેચીને જે થોડા ઘણાં આવે તે રોકડાં કરી લો અથવા જલ્દી એને છોડી મૂકો-ક્યાંક ત્યજી દો.

कलकलाट जां लगइ न होइ, रणि राउल गति न जाणइ कोइ। तिहां लगि परहाविउलविं, जिम किमइ न अवर न भोलवइ ॥

રણશિંગુ ફૂંકાય નહીં ત્યાં સુધી રજપૂતની યુદ્ધશક્તિની ખબર ન પડે, કોઈનાથી જાણી ન શકાય. તે જ રીતે બીજી કોઈ આવીને આને ભોળવી ન જાય ત્યાં સુધીમાં આ સ્થાપિત વસ્તુ (વ્યક્તિ) માટે કહી દો. એટલે કે તેનો સોદો પતાવી દો.

जउ वसुमती दोहिलूं धरइ तउ तिहां सील सखायत करइ । जे बहु बोली ते एहवउं झाक तेहनूं दैवि ऊदालिउ नाक ॥

આ બધા સંયોગોમાં વસુમતીના મનમાં દુઃખ લાગે છે ત્યારે શીલ સહાયતા કરે છે. જે વેશ્યા બહુ બોલતી હતી તેનું તો (નજીકના કોઇ દેવદ્વારા) નાક જ ઉડી ગયું.

जां जोइ तु नाक ज नहीं बोल वोलतां झबकइ रही । काली जिसी हुइ डूंबडी हसइ लोक पाडइ बूंबडी ॥

જ્યાં લોકોએ જોયું ત્યાં નાક જ ઉડી ગયું હતું. બોલતાં બોલતાં તે ઝબકી ગઇ અને ક્ષણવારમાં તો તે ડૂંબ જાતિની સ્ત્રી હોય તેવી કાળી થઈ ગઈ તેને જોઇ લોકો હસે છે અને બૂમ પાડે છે.

बीजी नासइ करती सान, आवि आवि हवइ जासि कान । एक लोक पाइकने खलइ, बीज वेस पूठि कलकलइ ॥
चालि चालि करती घर गइ मूंडी छोडी भलइ न लइं । कलरव कोलाहल अतिघणउ अवसर टलिओ वेकावा तणो ॥

બીજી બાઈ ઇશારો કરતી કરતી નાશે છે અને બોલે છે આવ આવ નહીંતર નાક તો ગયું હવે કાન પણ જશે ભેગા થયેલાં કેટલાંક સૈનિકને નિંદે છે તો કેટલાંક લોક વેશ્યાને માટે જાતજાતનું બોલે છે.

ચાલ ચાલ એવું બોલતી બધી વેશ્યા ઘેર ગઇ મનમાં વિમાસતી રહી કે આવી વિચિત્ર છોકરી ન લીધી તે ઠીક જ થયું. આ બાજુ લોકો ભેગા થઇ ગયા કોલાહલ ખૂબ થયો. અને વેચવાનો અવસર ટળી ગયો.

महामंत्र जपिइ नवकार जिणि तूठइ तरीइ संसार । त्रिणिवार पाणी गालीइ दीजइ दान शील पालिइ ॥
तप कीजइ भावना भावीइ साते क्षेत्रे धन वावीइ । विदल मांही नवि लीजइ दहीं अथाणानूं नाम ज नहीं ॥
निशि भोजन नवि कीजइ माइ, मधु मांखण घरि कोइ न खाइ । प्रात समे ऊठी देहरे जाय ए कुल रीति वणिक कहवाय ॥

ધનાવહ શેઠ પોતાના કુળનો પરિચય આપે છે. અમારે ત્યાં અમે બધા જેના પ્રભાવે સંસાર તરી જવાય તેવો મહામંત્ર નવકાર જપીયે છીએ. પાણી દિવસમાં ત્રણવાર ગાળીને વાપરીએ છીએ. દાન દઈએ છીએ. શીયળ પાળીયે છીએ. તપ કરીએ છીએ. ભાવના ભાવીએ છીએ. સાતે ક્ષેત્રમાં ધન વાપરીએ છીએ. વિદળ-કઠોળ માં દહીં લેતા નથી. અથાણાનું તો નામ જ નથી લેતા. રાત્રિ ભોજન કરતા નથી. મધ-માંખણ તો ઘેર કોઈ જ વાપરતું નથી. રોજ સવારે ઊઠીને દેરાસર જવાનું જ. આવી અમારા વણિક કુળની રીતિ કહેવાય છે

विहि विहडावइ विहि घडइ विहि घडिउं भंजेइ । इम्हइ लोअ जु तडफडइ जं विहि करइ सो होइ ॥

(વિધાતાની કેવી વિચિત્રતા છે) વિધાતા જ ઘડે છે અને વિધાતા જ વિખેરી નાંખે છે. વિધાતા જ ઘડી ઘડીને ભાંગે છે. હે લોકો શું આમ તડફડો છો જે વિધાતા કરે તે જ થાય છે.

पापी खत्र अखत्र नवि गणि मनि मइलु मुखि बेटी भणइ । सीअलुं बोली देसि दाघ डोकरिनि घरि पइठउ वाघ ॥
दूध नीम लीओ मांजार उंदिर सरसी मैत्री हारि । एह वात जइ साची होइ ए बेटी नवि मांनइ कोइ ॥

મૂલા મનમાં વિચારે છે પાપી માણસ ગમ્ય-અગમ્યનો વિચાર કરતો હોતો નથી. મનનો મેલો, મુખથી તો બેટી દીકરી (એમ બોલતા હોય છે)-એમ બોલે છે. ઠંડક કરું છુ એમ બોલીને ડામ દેશે (આ શોક ઘેર આવી એટલે) ડોકરીને

ઘેર વાઘ પેઠો. મુખથી ભલે આ બેટી બોલે પણ એની વાત સાચી કોણ માને ? બિલાડી એમ કહે કે દૂધ પીવાનો મેં નિયમ લીધો છે અને ઉંદર સાથે તો મારે મૈત્રી છે. શું આ બિલાડીની વાત કોઇ સાચી માને ? જો આ વાત કદાચ સાચી હોય તો પણ પેલી બેટી કહેવાની વાતને તો કોઇ પણ સાચી ન માને.

मुं पडती ए चढती वेस मझ मत्थइ थ्या करडा केश । वडपण तणी विणासण हारि, संप्रापती सउकि घर बारि ॥

હું તો હવે ઢળતી ઉંમરની થઇ અને આતો ચઢતું લોહી છે. મારા માથે તો વાળ કરડા–બરછટ થઇ ગયા છે- આ મારા ઘરમાં આવી એટલે મારું વડીલપણું ગયું સમજો. આવી શોકય હવે ઘરના બારણામાં આવી પહોંચી છે.

आगइं जीभइ आपणी, पीहरि सवि हुं अलखामणी । कोइ न पाइ पाणी पली बे भव ग्या हवइ निश्चइं वली ॥

પહેલાં પણ મારી (કડવી) જીભના કારણે પીયર (પિતૃગૃહ) માં હું અળખામણી હતી જ. (અને હવે અહીં આ દશા થઈ) તેથી હવે મને પળી જેટલું પાણી પણ કોઇ પીવરાવશે નહીં. મારા તો બેઉ ભવ બગડયા–એળે ગયા.

एह कारणि वेचिउं जेतलाउं मूं परिणतां न लागूं तेतलूं । शतानीक राइं चंपा लीइ लूसडी आज मूलानि हुइ ॥

આના કારણે–આને વેચાણ લેતાં–જેટલાં આપવા પડયા. તેટલાં તો મને પરણ્યા તેમાં નહોતા લાગ્યાં. ચંપાનગરી શતાનીક રાજાએ લીધી પણ આજે લૂંટ મૂલાને ત્યાં થઇ. (આટલા બધા પૈસા એક આવી છોકરી માટે આપ્યા)

ऊगंती विष वेलडी नखहिं न छेदीं जेहिं । ते मूरख मूला भणि, तरितु न साधि ' जेह ॥

વિષ વેલડીને–ઉગતી જ–નખ વડે જેણે ન છેદી. આવા કામ ત્વરિત જેણે ન સાધ્યાં. તે બધા મૂર્ખ છે એમ મૂલા શેઠાણી કહે છે.

फोडि नाम जु सीअला, विषहं जं मधुरउं नाम। सुकि जं नामि बिहडी, ए त्रणिह खई जाओ ॥

છે તો ફોડલાં પણ નામ આપે છે શીતળાં. છેતો ઝેર પણ નામ મધુર રાખવામાં આવે છે. (એજ રીતે) છે તો શોકય પણ કહેવાય છે 'બહેન' આ ત્રણે ક્ષયકારી જાણવા.

सउकि मारी केहु दोस सउकि मरि तु हुइ संतोस। सउकि तणी नवि लागइ गोज्झ राखि सउकि ते माणस रोज्झ ॥

શોકય ને મારવામાં શો દોષ લાગવાનો હતો ? કોઇ દોષ નહીં, શોક મરે તો સંતોષ થાય. શોકય મારીએ તો કાંઇ ગૌહત્યા (ગો વધ્યા–ગો વજ્જા–ગોજ્જા–ગોજ્જા–ગોજ્ઝ) ન લાગે, શોકય ને ઘરમાં રાખે તે માણસ નથી પણ રોઝ છે.

गोरी पुच्छइ सुगुण जण ऊभी रायह चउकि। जय को जाणइ ते कहउ सूली भली कि सुकि ॥

सूली एकज कहडउ सुकि अनंता कट्ठ। नितु मरि नितु मारीइ पगि पगि हियडा हट्ठ ॥

રાજમાર્ગની વચ્ચે ઊભીને ગોરી પૂછે છે–હે સજ્જનો ! જો જાણતા હો તો કહો, સૂળી સારી કે શોક સારી ! જુઓ સૂળી માં તો એક જ વાર કષ્ટ અને શોક માં તો અન્ત વિનાના કષ્ટ. રોજ મરવાનું અને રોજ મારવાનું ડગલે પગલે હૃદયમાં ખટકે છે.

नयरि भंगि, हुं पायरू लिइं, मारगि वहतां मांडी मुइ। ढोर तणी परि मांडी पीठ, वेस विसाहण आवी दीठ ॥

एक वात पण रूडी हुई, दोहिलुं छै पण तेहइ न लिई। नवरुं थानक पामिउं आज, करिसिउं धर्मध्याननउं काज ॥

ચંદના મનમાં વિચારે છે. નયરનો ભંગ થયો, સૈનિકે મારું અપહરણ કર્યું. રસ્તામાં મારી માતા મૃત્યુ પામી ઢોરની જેમ બજારમાં મને વેચવા ઉભી રાખી. (પીઠ=એટલે બજાર. દાણાપીઠ વ. ની જેમ) અને ત્યાં મને વેચાતી લેવા

વેશ્યા આવી. આમ તો આ બધું ય દુઃખ છે. તો પણ એક વાત સારી બની કે તેણીએ મને ન લીધી, અહીં સરસ એકાન્ત સ્થાન પામીને ધર્મધ્યાનનું કાર્ય કરીશ.

जाणइ नही दिवस नइ रयणी झरतउ नीर निवारि नयणि । चंदनबाला मंत्र मनि जपइ त्रिहुं उपवासे कर्मज खपइ ॥

એકાન્ત ઓરડામાં રહેલી ચંદનબાળા, દિવસ કે રાત કશું જાણુતી નથી, આંખમાંથી આંસુ ઝર્યા કરે છે. પણ મનમાં તો નવકાર મંત્ર જપ્યા કરે છે. એમને એમ એને ત્રણુ ઉપવાસ થાય છે અને કર્મ ખપતા જાય છે

छोकरडां वींटे वीत्राय घडीय इक न रहि घहरि पाय । कुण जाणइ ए किहां डमडमइ कुण जाणइ किहिं सरसी रमइ ॥
आवइ छइं छोडाउं वणां ओलखसि कोइ एहू तणां । सगु सणीजउ लेइ जाइसी माहरि वाहर को धाइसि ॥

મૂલા કહે છે કે આતો છોકરાંથી વીંટળાયેલી રહે છે. ઘડી વાર પણુ તેનો પગ ઘરમાં નથી ટકતો. કોણુ જાણે તે ક્યાં રખડે છે. શી ખબર તે કોની સાથે રમે છે. આમ તો ઘણા જુવાન આવે છે. એને કોણુ ઓળખે છે ? જો આમાંનો કોઈ સગો કે સણુજો એને ઉપાડી જશે તો મારી મદદે કોણુ દોડી આવશે ?

तुम्ह मनि छोकरडी नउ सोग, अम्ह आपण अरथ कुजोग । एतलाउ सोनउ आपत, व्याजि वरसि बिमणउ आवत काजि ॥

તમારા મનથી આ છોકરી શોક નથી, પણુ મને તો આમાં આપણાં અર્થનો કુજોગ–દુર્વ્યય લાગે છે. આટલા સૌનેયા વ્યાજે આપત તો પણ વરસદિવસે બમણું વ્યાજ મળત. અને એ કામમાં લાગત.

गहिला गामट मूढ गमार चंदन मुइ किसी करि सार । कही वार जीवत जइ होइ तो तुं इण ओरडइ जोइ ॥

ઘરડી દાસી કહે છેઃ તમે મૂઢ ગમાર જેવા છો. ચંદના તો મરી ગઈ હશે ! તમે ક્યાં તેની કશી સાર–સંભાળ લો

છો ? કદાચ એ જીવતી હોય તો તમે એ ઓરડે જઇને જુઓ.

चंदनबाला बोले तिणे ठाइ मूलादेवी अम्हारी माइ । धारिणी तूठी त नवि कीध, मूला दीठि काज मुज सीध ॥
पहिलुं शतानीक धुरि राय पच्छइ पायक तणु पसांय । जउ वीकत वेश्यानिं हत्थि तु हुं किम लागत परमत्थि ॥
धनावह पहिला भवनुं बाप, जेह पसाइ नाठउ मज्झ पाप । मूला तणउ घणउ उपकार चंदन मागइ संयम भार ॥

(સર્વત્ર શુભદર્શિની) ચંદના તે વખતે બોલે છે કે-મૂલાદેવી તો મારી માતા છે. ધારિણી માતાથી જે કામ ન થયાં તે કામ મૂલાની દૃષ્ટિથી સિદ્ધ થયાં. પહેલું ભલું કર્યું શતાનીક રાજાએ; પછીથી એ સૈનિકનો પસાય, જો તેણે મને વેશ્યાને વેચી હોત તો હું આ પરમાર્થને ક્યાંથી પામત. ધનાવહ શેઠ તો મારા પહેલા ભવના, (ગયા ભવના) બાપ છે. જેઓના પસાયથી મારું પાપ નાઠું. મૂલા શેઠાણીનો ઘણો ઉપકાર છે. હવે ચંદના સંયમ માંગે છે.

चंदना भणइ जो मांग्युं होय, तु मूला मन दूहवजो कोइ । सासण देवि आपइ आसिका मूला थइ परम श्राविका ॥

ચંદના કહે છે જો માંગ્યું આપતા હો તો મૂલાને કોઈ દુભવતા નહીં. શાસનદેવી તે વખતે આશિષ આપે છે અને ત્યારથી મૂલા પરમ શ્રાવિકા થઈ.

उवयारि उवयारउ सव्वो लोय करेइ । अवगुण कीधि गुणकारि विरलु जणणी जणेइ ॥

ઉપકારી ઉપર ઉપકાર તો સર્વ લોક કરે છે. અવગુણ કરનાર-અપકાર કરનાર પ્રત્યે ગુણ કરવો-ઉપકાર કરવો એવું કામ તો વિરલા જ કરી શકે અને એવા પુત્રને વિરલ જનની જ જન્મ આપે છે.



## अभयकुमार कथा–पृ. ६४–६५

कूकर कहेतां कोपे चढीओ घरजमाइ थाई । हईयां हीयाली को कहइ, कवण भणउ बिहु मांहि ॥

કૂતરો, કહ્યો એમાં તો ક્રોધે ભરાયો, અને હવે ઘરજમાઈ થઈને રહે છે. (ઘરજમાઈનું સ્થાન કૂતરાના જેવું હીણું ગણાય છે) હે હૃદય ! સમસ્યાને કોણ કહે ? આ બેમાં ઉચિત કયું ગણાય તે કહે :

मारण ताडण जे करि जेवी केवी लहंति । अम्ह सरिखां बेटडां ते बाले न रहंति ॥

अमीय रसायण अग्गली माय ताय गुरु सीख । जे नवि मानिइ बप्पडा ते रुलीया सवि दीह ॥

કેટલાંક દીકરા એવા હોય છે કે તેને મારણ–તાડણ કરવામાં આવે તો પણ તેઓ ખમી લે છે. અને જેવી તેવી રીતે માની જાય છે. પણ અમારા જેવાં દીકરા તો ઠપકાના એક બોલને પણ સહી શકતા નથી. અમૃત કરતાં પણ વધારે ગુણકારક એવી માતા–પિતાની શીખામણ હોય છે. જે દીકરાં એ માનતાં નથી તે બાપડાં બધી રીતે રખડી પડે છે.

मम ऊपहरा बोलडा लहसिइं रायकुमार । हुं तुम्हि भणिओ वाणिओ नेह वयण फलसार ॥

जीणि अवसरि जोईए सामीतणउ पसाय । तेण नीर (च) ऊतारणओ किम सेविजइ राओ ॥

घर जमाई घर सुणह ते कुण हुंस धरंति । पण अपमान्या छोरडां मरइ कि दूर फरंति ॥

શ્રેણિક પોતાના પિતા પ્રસેનજિતને પત્ર લખે છે. તેમાં લખે છે કે–મને જે ઠપકાના બોલ કહ્યા તે બીજા રાજકુમારો પણ જાણશે. તમે મને વાણિયો કહ્યો, પણ તે સ્નેહભર્યાં વચન એ વાણીનું ફળ (वाचः फलं प्रीतिकरं नराणाम्) જે

સમયે સ્વામીનો-પિતાનો કૃપાપ્રસાદ જોઈ એ તેં સમયે અમારું અપમાન કરીને નીચે ઉતારો તો એવા રાજાને કેમ કરીને સેવીએ. ઘરજમાઈ અને ઘરનો કૂતરો (એ બે સરખા છે). તો તેવા થવાની હોશ=ઇચ્છા કોણ કરે. અને આ રીતે અપમાનિત થયેલા છોકરા તો કાતો મરી જાય કાં તો વેગળા ફરે છે.

जे मि सभामाहि बोलनुं ते अपमान कि मान । सोजि संभारि विचारि करि तां आरोगुधान ॥

સભામાં મેં જે વચન કહ્યાં તે વચનો અપમાન રૂપ હતા કે માનરૂપ હતાં તેના ઉપર બરાબર વિચાર કરીને ધાન-ભોજન આરોગો-કરો.

मोर भणइ अम्ह पीछडां मिंइ मेल्हीआं वणेह । हुं अगासो तीह विण ते सिरि राय वहेइ ॥५५॥

મોર કહે છે-મેં મારાં પીછાં વનમાં મૂકયાં છે અને તેના વિના હું ઉઘાડો થયો છું અર્થાત્ પીંછાં રહિત બન્યો છું. (નગ્ન થયો છું) પરંતુ તે પીંછાં તો રાજાના મસ્તક ઉપર શોભાને વહન કરે છે.

जातइ एकजि पिछडइ मोर दोहिल्लउ कांई । ते नवाणू पीछडा भरी पूरी रहिआइं ॥५६॥

એક પીછું જવાથી મોરને કાંઈ નુકશાન થતું નથી તે નવાણું પીછાં તો સમુદાય રૂપે રહેલાં જ છે.

वेडी केरां पाटीयां वधा बांहुअ गुणेहिं । पइठाणु छांडइ रहण तो तारिज्जइ केण ॥५७॥

વહાણના પાટીયાં ઘણાં દોરડાં વડે બાંધ્યાં છે હવે જો એ આધારને જો છાંડીશ-ત્યજી દઈશ તો તું કેવી રીતે તરી શકીશ.

कल्पतरु केरु पांदडु ऊडिउ वायवसेण । तु तिहां सीली छांहडी जे सीअला ते सील ॥५८॥

કલ્પવૃક્ષનું એક પાંદડુ પવંનવડે ઉડીને બીજે પડયું. તો પણ કલ્પવૃક્ષની છાયા તો શીતલ જ રહી છે. જે સ્વયં શીતળ છે તેનો સ્વભાવજ શીતળ હોય છે.

## श्रीयक कथा–पृ. ७९–८०

पावसउ मिलियाव तिणि कमलिनी वढीया घटीया नहि । पसरतउ वीयालि इतीवार, कुण पडिखिसिइ ॥३॥

વર્ષાઋતુમાં મેળાપ થાય તેથી કમલિનીમાં વૃદ્ધિ હાનિ થતી નથી. અર્થાત્ એમની એમ જ રહે છે. (પરંતુ વિકાસને માટે) આવતી શરદ ઋતુની રાહ કોણ જોશે.

संखसि उपरि दंड कहि निग्गहु पर सिरस्सु । अज्जि अछइ अग्गलओ जं विच्छोहि पियस्स ॥३॥

બીજાના મસ્તકનો છેદ થાય (કપાય) એનાથી બીજો વધારે દંડની તું કયી શંકા કરે છે? (કારણકે) હજી આગળ પ્રિયનો વિયોગ તો રહેલો જ છે.



